# प्रकीर्ण दुहा

बहोत गइ थोडी रही, मन मत आकुल हो ।
धीरज सबको मित्र है, करी कमाइ मत खोय ॥१॥
संतवचन वर्षा सुधा, श्रोता कुंभ समान।
ढक्या ढांकण मोहका, पडे न घटमां ज्ञान ॥२॥
बुरा बुरा सहु को कहे, बुरा न दीसे कोय ।
जो घट सोधुं आपणा, तो मुजसे बुरा न कोय ॥३॥
नमन नमन मे फेर हे, नमे चतुर सुजाण ।
दगाबाज दुगुणा नमे, चित्ता चोर कबान ॥४॥
जाणुं जाणुं शुं करे, धन ले गया दूर ।
शेठाणी कहे शेठने, तारा जाणपणामां धूळ ॥५॥
बहोत वणीज बहु बेटीयां, दो नारी भरथार ।
उस्का हे क्या मारणा, मार रह्या किरतार ॥६॥
तीय पियर नर सासरे, संजमीयो थीर वास ।
एतां होय अळखामणां, जो मांडे थीर वास ॥७॥
भले भलाइ बुरे बुराइ, तुमे कर देखोरे भाइ ।
चिठ्ठी दीइ बमन्नकुं, नाक कटाया नाइ ॥८॥
अगन पलीता राजदंड, चोर मुशले जाय ।
इतना दंड दुनिया सहे, सधर्म दंड ह्यो न जाय ॥९॥
परनारी झेरी छुरी, मत लगावो अंग ।
दश शीर रावण के कटे, परनारी के संग ॥१०॥
परनारी प्रसन्न भइ, देवत नही कछु ओर ।
मूत्रपात्र आगे धरे, ओही नरकको ठोर ॥११॥

संतोष प्रश्न कोसि त्वं,
ज्ञानघटोऽस्मि मुद्गरोऽस्मि ।

गीते नादे पठे वादे संग्रामे श्वशुरगृहे ।
आहारे व्यवहारे च लज्जामष्टसु न कुर्यात् ॥३३६॥
जिह्वे प्रमाणं जानीहि भोजने वचने तथा ।
अतिभुक्तमतीवोक्तं प्राणिनां प्राणनाशकम् ॥३३७॥

गुरवो यत्र पूज्यन्ते यत्र वित्तं नयार्जितम् ।
न दन्तकलहो यत्र, तत्र शक्र ! वसाम्यहम् ॥३३८॥

खलानां कंटकानां च द्विविधैव प्रतिक्रिया ।
उपानद् मुखभंगो वा दूरतो वापसर्पणम् ॥३३९॥

आगतो वकरूपेण पश्चात् जायते केसरी ।
भस्ममुष्टीप्रसादेन मन्यते तृणवज् जगत् ॥३४०॥

परापवादनिरतो मातुरप्यधिकः खलः ।
माता मलं हि हस्तेन खलः क्षालति जिह्वया ॥३४१॥

कालो न यातो वयमेव याता भोगा न भुक्ता वयमेव भुक्ताः ।
तृष्णा न जीर्णा वयमेव जीर्णास्तपो न तप्तं वयमेव तप्ताः ॥

पुढवीदगअगणिमारुयवणस्सइबितिचउपणिंदियजीवे ।
पेहोपेहपमज्जण परिट्ठवण मणोवईकाए ॥३४३॥

मितम्पचश्रीरधमोत्तमेच्छा सुरङ्गधूली कुसुमं वनस्य ।
छाया च कूपस्य विनाशमेते पश्चापि तत्रैव किल प्रयान्ति ॥

जायमानो हरेद् भार्याम् वर्धमानो हरेद् धनम् ।
म्रियमाणो हरेत् प्राणान् नास्ति पुत्रसमो रिपुः ॥३४५॥

देयं भोज ! धनं धनं सुकृतिना नो संचितव्यं कदा,
श्रीकर्णस्य बलेश्च विक्रमपतेरद्यापि कीर्तिः स्थिरा ।
अस्माकं मधुदानभोगरहितं नष्टं चिरात् संचितं,
निर्वेदादिति पाणिपादयुगलं घर्षत्यहो मक्षिका ॥३४६॥

लज्जातो भयतो वितर्कवशतो मात्सर्यतो स्नेहतो,
लोभादेव हठाभिमानविनयशृंगारकीर्त्यादितः ।
दुःखात् कौतुकविस्मयव्यवहृतेर्भावात् कुलाचारतो,
वैराग्याच्च भजन्ति धर्ममसमं तेषाममेयं फलम् ॥३४७॥

किं पाणिना परवधूस्तनलम्पटेन,
किं पाणिना शरणसंगतघातकेन ।
किं पाणिना परधनग्रहणोद्यतेन,
किं पाणिना गलगृहीतवनीपकेन ॥३२३॥

हस्तौ दानविवर्जितौ श्रुतिपुटौ सारश्रुते द्रोहिणौ,
नेत्रे साधुविलोकनेन रहिते पादौ न तीर्थं गतौ ।
अन्यायार्जितवित्तपूर्णमुदरं गर्वेण तुंगं शिरः,
रे ! रे ! जम्बुक मुञ्च मुञ्च सहसा नीचस्य निन्द्यं वपुः ॥

मृगमीनसज्जनानां तृणजलसंतोषविहितवृत्तीनाम् ।
लुब्धकधीवरपिशुनाः निष्कारणवैरिणो जगति ॥३२५॥

सर्वेऽपि यत्र नेतारः सर्वे पंडितमानिनः ।
सर्वे महत्त्वमिच्छन्ति तद् वृन्दमवसीदति ॥३२६॥

पदे पदे हि रत्नानि योजने रसकूपिका ।
भाग्यहीना न पश्यन्ति बहुरत्ना वसुंधरा ॥३२७॥

तावद् भयेन भेतव्यं यावदनागतं भयम् ।
आगतं तु भयं दृष्ट्वा यतितव्यं तदत्यये ॥३२८॥

शैले शैले न माणिक्यं मौक्तिकं न गजे गजे ।
साधवो नहि सर्वत्र चन्दनं न वने वने ॥३२९॥

आचारः कुलमाख्याति देशमाख्याति भाषणम् ।
संभ्रमः स्नेहमाख्याति रूपमाख्याति भोजनम् ॥३३०॥

पुष्पाद्यर्चा तदाज्ञा च तद्द्रव्यपरिरक्षणम् ।
उत्सवास्तीर्थयात्रा च भक्तिः पञ्चविधा जिने ॥३३१॥

स्वमांसं दुर्लभं लोके लक्षेणाऽपि न लभ्यते ।
अल्पमूल्येन लभ्येत पलं परशरीरजम् ॥३३२॥

बोधयन्ति न याचन्ते भिक्षाद्वारा गृहे गृहे ।
दीयतां दीयतां नित्यमदातुः फलमीदृशम् ॥३३३॥

विवेकदीपो हृदि तावदेव स्फुरत्यहो दर्शितधर्ममार्गः ।
उन्मूलिताचारविमानवृक्षो न वाति यावत् किल कामवायुः ॥

यस्य त्रिवर्गशून्यस्य दिनान्यायान्ति यान्ति च ।
स लोहकारभस्त्रेव श्वसन्नपि न जीवति ॥३३५॥

खल्वाटो दिवसेश्वरस्य किरणैः संतापितो मस्तके,
वाञ्छन् स्थानमनातपं विधिवशात् विल्वस्य मूलं गतः ।
तत्राप्यस्य महाफलेन पतता भग्नं सशब्दं शिरः;
प्रायो गच्छति यत्र दैवहतकस्तत्रैव यान्त्यापदः ॥३१३॥

कुंडले नाभिजानामि नाभिजानामि कंकणे ।
नूपुरेत्वभिजानामि नित्यं पादाब्जवन्दनात् ॥३१४॥

वैद्यराज ! नमस्तुभ्यं यमराजसहोदर ! ।
यमो हि हरति प्राणान् वैद्यः प्राणान् धनानि च ॥३१५॥

कूटसाक्षी सुहृद्द्रोही कृतघ्नो दीर्घरोषणः ।
चत्वारः कर्मचाण्डालाः पञ्चमो जातिसंभवः ॥३१६॥

दुष्टस्य दंडः स्वजनस्य पूजा न्यायेन कोशस्य च संप्रवृद्धिः ।
अपक्षपातोऽरिषुराष्ट्ररक्षा पञ्चैव यज्ञाः कथिता नृपाणाम् ॥

धर्मारम्भे ऋणच्छेदे कन्यादाने धनागमे ।
शत्रुघातेऽग्निरोगे च कालक्षेपं न कारयेत् ॥३१८॥

शय्योत्पाटनगेहमार्जनपयःपावित्र्यचुल्लीक्रिया,
स्थालीक्षालनधान्यपेषणभिदागोदोहतन्मन्थने ।
पाकस्तत्परिवेषणं समुचितं पात्रादिशौचक्रिया,
श्वश्रूभर्तृननान्द्ददेवृविनयाः कृत्यानि वध्वा इति ॥३१९॥

पोषकाः स्वकुलस्यैते काककायस्थकुक्कुटाः ।
स्वकुलं घ्नन्ति चत्वारो वणिक् श्वानो गजा द्विजाः ॥३२२॥

स्थाने सिंहसमा वने मृगसमा देशान्तरे जम्बुकाः,
आहारे बकभीमसेनसदृशाः श्वानोपमा मैथुने ।
रूपं मर्कटवत् पिशाचलिपिकृत् चान्येपि ते निर्गुणाः,
कार्यार्थे कटकाः परार्थलटका एते गुणा वाणिजाः ॥३२१॥

गगननगरकल्पं संगमं वल्लभानां,
जलदपटलतुल्यं यौवनं वा धनं वा ।
स्वजनसुतशरीरादीनि विद्युच्चलानि,
क्षणिकमिति समस्तं विद्धि संसारवृत्तं ॥३२२॥

॥१४॥

यदि वाञ्छसि मूर्खत्वं ग्रामे वस दिनत्रयम् ।
अपूर्वस्यागमो नास्ति पूर्वाधीतं च नश्यति ॥३०३॥

हत्वा नृपं पतिमुपेक्ष्य भुजंगदष्टं,
देशान्तरे विधिवशात् गणिकाऽस्मि जाता ।
पुत्रस्य भोगमधिगम्य चितां प्रविष्टा,
शोचामि गोपगृहिणि ! कथमद्य तक्रम् ॥३०४॥

आपद्गतं हससि किं द्रविणान्धमूढ,
लक्ष्मीः स्थिरा न भवतीति किमत्र चित्रम् ।
एतान्न पश्यसि घटान् जलयन्त्रचक्रे
रिक्ता भवन्ति भरिता भरिताश्च रिक्ताः ॥३०५॥

रात्रिर्गमिष्यति भविष्यति सुप्रभातं,
भास्वानुदेष्यति हसिष्यति पंकजं च ।
इत्थं विचिन्तयति कोशगते द्विरेफे
हा ! हन्त हन्त नलिनीं गज उज्जहार ॥३०६॥

सुतारा विक्रीता स्वजनविरहः पुत्रमरणम्,
विनीतायास्त्यागो रिपुबहुलदेशे च गमनम् ।
हरिश्चन्द्रो राजा वहति सलिलं प्रेतसदने,
अवस्थाऽनेकाऽहोप्यहह विषमाः कर्मगतयः ॥३०७॥

कलहिन्या गेहिन्याऽत्र के के नोद्विजिता जनाः ।
साऽत्रागतेति श्रुत्वैव त्यक्त्वा पात्रं गतोऽमरः ॥३०८॥

यः काकीणीमप्यपथप्रपन्नामन्वेषते निष्कसहस्रतुल्याम् ।
कालेन कोटीष्वपि मुक्तहस्तस्तस्यानुबन्धं न जहाति लक्ष्मीः ॥

धनानि तिष्ठन्ति गृहेषु नार्यो विश्रामभूमौ स्वजनः श्मशाने ।
देहं चितायां परलोकमार्गे कर्मानुगो याति स एक एव ॥

परस्परस्य छिद्राणि ये न रक्षन्ति जन्तवः ।
त एव निधनं यान्ति वल्मीकोदरसर्पवत् ॥३११॥

यस्य नास्ति स्वयं प्रज्ञा मित्रोक्तं न करोति यः ।
स्त्रीवशगो निधनं याति यथा मंथरकोलीकः ॥३१२॥

सत्यं वच्मि हितं वच्मि वच्मि सारं पुनः पुनः।
अस्मिन् असारे संसारे सारं आत्महितं कुरु ॥२९४॥

धर्माख्याने श्मशाने च रोगिणां या मतिर्भवेत्।
सा यदि निश्चला बुद्धिः को न मुच्येत बन्धनात् ॥२९५॥

चेतोहरा युवतयः स्वजनोऽनुकूलः,
सद्बान्धवाः प्रणयगर्भगिरश्च भृत्याः।
वल्गन्ति दन्तिनिवहास्तरलाः तुरंगाः,
संमीलने नयनयोर्नहि किंचिदस्ति ॥२९६॥

पृथिव्यां त्रीणि रत्नानि जलमन्नं सुभाषितम्।
मूढैः पाषाणखण्डेषु रत्नसंज्ञाऽभिधीयते ॥२९७॥

मानुष्यमार्यविषयः सुकुलप्रसूतिः
श्रद्धालुता गुरुवचःश्रवणं विवेकः।
मोहान्धिते जगति संप्रति सिद्धिसौध–
सोपानपद्धतिरियं सुकृतोपलभ्या ॥२९८॥

क्वचित् विद्वद्गोष्ठी क्वचिदपि सुरामत्तकलहः,
क्वचित् रम्या रामा क्वचिदपि जराजर्जरतनुः।
क्वचिद् वीणावादः क्वचिदपि च हाहेति रुदितं,
न जाने संसारः किममृतमयः किं विषमयः ॥२९९॥

श्वसुरगृहनिवासो स्वर्गतुल्यो नराणाम्,
यदि वसति विवेकी वासराणि त्रिपंच।
दधिमधुघृतलोभात् मासयुग्मं वसेत् चेत्,
स भवति खरतुल्यो मानवो मानहीनः ॥३००॥

वज्रकुटे विजेरामः तिलतैले च माधवः।
भूमिशय्या मणिरामः धक्काधुमेन केशवः ॥३०१॥

मद्गेहे मशकीव मूषकवधूर्मूषीव मार्जारीका,
मार्जारीव शुनी शुनीव गृहिणी पुत्रास्तथा वायसाः।
नान्नं खादति चक्रिकापि दिवसे चरीकर्ति चान्द्रायणिं,
चुल्ली चानलसंगमं न कुरुते भीमस्य पुत्री यथा ॥३०२॥


॥१३॥

आशया ये कृता दासास्ते दासाः जीवलोकस्य ।
आशा दासीकृता यैश्च तेषां दासायते जनः ॥२६३॥

यस्य यमेन मैत्री स्यात् ज्ञानं वा भुवनाद्भुतं ।
स एवं वदति कल्येऽहं करिष्याम्यपरः कथम् ॥२६४॥

अन्यस्थाने कृतं पापं धर्मस्थाने विनश्यति ।
धर्मस्थाने कृतं पापं वज्रलेपो भविष्यति ॥२६५॥

मुद्गदाली गदव्याली कवीन्द्रा ! वितुषा कथं ।
अन्धोवल्लभसंगेन जाता विगतकञ्चुका ॥२६६॥

गृहे हित्वा बालां सकलसुखसौभाग्यकलितां,
विदेशं ते यान्ति प्रचुरधनलुब्धाः सुगुणिनः ।
यदि द्रव्यप्राप्तिर्न च तरुणतायाः सुखमपि;
न देयं पांडित्यं कथमपि नृणां हंसगमने ॥२६७॥

द्वौपादौ द्वौहस्तौ च दृश्यसे मयुष्याकृतिः ।
रेरे वानरमुर्खत्वं कथं गृहं न बग्यसे ॥२६८॥

शुचिमुखि ! दुराचारे रे रे पंडितवादीनि ! ।
असमर्थो गृहारभे समर्थो गृहभंजने ॥२६९॥

राज्योपभोगशयनासनवाहनेषु,
स्त्रीगंधमाल्यमणिरत्नविभूषणेषु ।
इच्छाभिलाषमतिमात्रमुपैति मोहाद् ,
ध्यानं तदार्त्तमिति तत्प्रवदन्ति तज्ज्ञाः ॥२७०॥

संछेदनैर्दहनभञ्जनमारणैश्च,
बन्धप्रहारदमनैर्विनिकृन्तनैश्च ।
यो याति रागमुपयाति च नानुकम्पां;
ध्यानं तु रौद्रमिति तत् प्रवदन्ति तज्ज्ञाः ॥२७१॥

सूत्रार्थसाधनमहाव्रतधारणेषु,
बन्धप्रमोक्षगमनागमहेतुचिन्ता ।
पञ्चेन्द्रियव्युपरमश्च दया च भूते;
ध्यानं तु धर्ममिति तत् प्रवदन्ति तज्ज्ञाः ॥२७२॥

यस्येन्द्रियाणि विषयेषु पराङ्मुखानि,
संकल्पकल्पनविकल्पविकारदोषैः ।
योगैः सदा त्रिभिः रहो निभृतान्तरात्मा;
ध्यानोत्तमं प्रवरशुक्लमिदं वदन्ति ॥२७३॥

आर्ते तिर्यग्गतिस्तथा गतिरधो ध्याने तु रौद्रे सदा,
धर्मे देवगतिः शुभं च हि फलं शुक्ले च जन्मक्षयः ।
तस्माद् व्याधिरुगन्तके हितकरे संसारनिस्तारके;
ध्याने शुक्लवरे रजःप्रमथने कुर्यात्प्रयत्नं बुधः ॥२७४॥

जयसिरिवंछियसुहए अनिट्ठहरणे तिवग्गसारंमि ।
इह परलोअहियत्थं सम्मं धम्मंमि उज्जमह ॥२७५॥

धीद्धी पमायललियं सुमंगलो वत्थमेरिसिं पत्तो ।
किं कुणिमो अंवडया पसरंति न अम्ह गुरु पाया ॥२७६॥

चिंतेई दट्ठुमिच्छेई दीहं णीससइ तह जरो दाहो ।
भत्तारोयगमुच्छा उम्मत्तो ण याणई मरणं ॥२७७॥

कन्थाऽऽचार्याघना ते ननु शफरवधे जालमश्नासि मत्स्यान्,
ते मे मद्योपदंशान् पिबसि ननु युतो वेश्यया यासि वेश्याम् ।
कृत्वारीणां गलेऽङ्घ्रीक्वनु तव रिपवो येषु सन्धिं छिनद्मि;
चौरस्त्वं द्यूतहेतोः कितव इति कथं येन दासीसुतोऽस्मि ॥

वेयण वेयावच्चे इरियट्ठाए य संजमट्ठाए ।
तह पाणवत्तिआए छट्ठं पुण धम्मचिंताए ॥२७९॥

किं ताए पढियाये पयकोडिए पलालभूयाये ।
जे इत्तियं न नायं परस्स पीडा न कायव्वा ॥२८०॥

परिहरति न मृत्युः पंडितं श्रोत्रियं वा,
धनकनकसमृद्धं बाहुवीर्यं नृपं वा ।
तपसि निरतमेतं सुस्थितं दुःस्थितं वा
वनगत इव वह्निः सर्वभक्षी कृतान्तः ॥२८१॥

जागरिया धम्मीणं अहम्मीणं च सुत्तया सेया ।
वच्छाहिवभइणीए जिणो कहिंसु जयंतीए ॥२८२॥

परपुंसि रता नारी भर्तारमनुवर्तते ।
तथा तत्त्वरतो योगी संसारमनुवर्तते ॥२४१॥

आलोअसु अइआरे वयाइं उच्चरसु खमसु जीवेसु ।
वोसिरसु भाविअप्पा अट्ठारस पावठाणाइं ॥२४२॥

चउसरणं दुक्कडगरिहणं च सुकडाणुमोअणं कुणसु ।
सुहभावणं अणसणं पञ्चनमुक्कारसरणं च ॥२४३॥

सर्वैः सर्वे मिथस्सर्वसंबन्धा लब्धपूर्विणः ।
साधर्मिकादिसंबन्धलब्धारस्तु मिताः क्वचित् ॥२४४॥

अणंतपावरासीओ जया उदयमागया ।
तया इत्थित्तणं पत्तं सम्मं जाणाहि गोयमा ॥२४५॥

जत्थ पुरे जिणभवणं समयविऊ साहुसावया जत्थ ।
तत्थ सया वसिअव्वं पउरजलं इंधणं जत्थ ॥२४६॥

अट्टमट्टं पि सिक्खिज्जा सिक्खियं न निरत्थयं ।
अट्टमट्टपसाएण खज्जए गुलतुंबयं ॥२४७॥

पंडितोऽपि वरं शत्रुः न मूर्खो हीतकारकः ।
वानरेण हतो राजा विप्रचोरेण रक्षितः ॥२४८॥

आम्रे निम्बे सुतीर्थे कचवरनिचये शुक्तिमध्येऽहिवक्त्रे,
औषध्यादौ विषद्रौ गुरुसरसि गिरौ पाण्डुभूकृष्णभूम्योः।
रुक्षुक्षेत्रे कषायद्रुमवनगहने मेघमुक्तं यथाम्भः,
तद्वत्पात्रेषु दानं गुरुवदनभवं वाक्यमायाति पाकम् ॥२४९॥

श्रूयतां धर्मसर्वस्वं श्रुत्वा चैवाऽवधार्यताम् ।
आत्मनः प्रतिकूलानि परेषां न समाचरेत् ॥२५०॥

ये स्त्रीशस्त्राक्षसूत्रादिरागाद्यङ्ककलङ्किताः ।
निग्रहानुग्रहपरास्ते देवाः स्युर्न मुक्तये ॥२५१॥

परपत्थणापवन्नं मा जणणि जणसु एरिसं पुत्तं ।
मा उअरेवि धरिज्जसु पत्थिअभंगो कओ जेण ॥२५२॥

नीचैर्गोत्रावतारश्चरमजिनपतेर्मल्लिनाथेऽबलात्वं,
आन्ध्यं श्रीब्रह्मदत्ते भरतनृपजयः सर्वनाशश्च कृष्णे ।

निर्वाणं नारदेऽपि प्रशमपरिणतिः स्यात् चिलातिसुतेऽपि;
त्रैलोक्याश्चर्यहेतुः जयति विजयिनी कर्मनिर्माणशक्तिः ॥

गगननगरकल्पं संगमं वल्लभानां,
जलदपटलतुल्यं यौवनं वा धनं वा ।
स्वजनसुतशरीरादीनि विद्युच्चलानि;
क्षणिकमिति समस्तं धिद्धि संसारवृत्तं ॥२५४॥

सुट्ठुवाइअं सुट्ठुगाइअं सुट्ठुनच्चिअं सामसुंदरि ।
अणुपालिय दीहराइया सुमिणान्ते मा पमायये ॥२५५॥
पत्थरेण हतो किवो तं पत्थरं डक्कुमिच्छइ ।
मिगारिओ सरं पप्प सरुप्पत्तिं विमग्गइ ॥२५६॥
न कयं दीणुद्धरणं न कयं साहम्मिआण वच्छल्लं ।
हिययम्मि वीअराओ न धारियो हारियो जम्मो ॥२५७॥
यावद् देहमिदं गदैर्न मृदितं नो वा जराजर्जरं,
यावत् त्वक्षकदम्बकं स्वविषयज्ञानावगाहक्षमम् ।
यावच्चायुरभंगुरं निजहिते तावत् बुधैर्यत्यताम् ;
कासारे स्फुटिते जले प्रचलिते पालिः कथं बध्यते ॥

साधुभ्यः साधुदानं रिपुजनसुहृदां चोपकारान् कुरु त्वं,
सौजन्यं बन्धुवर्गे निजहितमुचितं स्वामिकार्यं यथार्थं ।
कर्णान्ते तथ्यमेतत् कथयति भवतो लेखिनी भाग्यशालीन्;
नो चेत् नष्टेऽधिकारे मम मुखसदृशं तावकास्यं भवेद्धि ॥

आयुर्वर्षशतं नृणां परिमितं रात्र्या तदर्धीकृतं,
तस्यार्द्धस्य कदाचिदर्धमधिकं वार्धक्यबाल्ये गतं ।
शेषं रोगवियोगशोकमदनक्रोधादिभिर्व्याकुल-
स्यायुर्याति नरस्य तत्र कतमो यो धर्मकर्मक्षणः ॥२६०॥
सरागोऽपि हि देवश्चेत् गुरुरब्रह्मचार्यपि ।
कृपाहीनोऽपि धर्मः स्यात् कष्टं नष्टं हहा जगत् ॥२६१॥
तित्थयरो गणहारी सुरवइणो चक्कीकेसवा रामा ।
अवहरिआ हयविहिणा अवरजीवाण का वत्ता ॥२६२॥

उदकममृतकल्पं दग्धुराजीवितान्तं,
नहि कृतमुपकारं साधवो विस्मरन्ति ॥२१५॥

क्षीरेणात्मगतोदकाय स्वगुणाः दत्ताः पुरा तेऽखिलाः,
क्षीरे तापमवेक्ष्य तेन पयसा ह्यात्मा कृशानौ हुतः ।
गन्तुं पावकमुन्मनस्तदभवद् दृष्ट्वा तु मित्रापदं,
युक्तं तेन जलेन शाम्यति पुनर्मैत्री सतामीदृशी ॥२१६॥

राजन् मया निशीन्द्रेण, परद्रव्यापहारिणा ।
लुप्तं विधिकृतं कर्म, रत्नं रत्नेन योजितं ॥२१७॥

वसुधाभरणं पुरुषाः पुरुषाभरणं प्रधानतरलक्ष्मीः ।
लक्ष्म्याभरणं दानं, दानाभरणं सुपात्रं च ॥२१८॥

एकाक्षरप्रदातारं, यो गुरुं नाभिमन्यते ।
श्वानयोनिं शतं गत्वा, चांडालेष्वपि जायते ॥२१९॥

नाहं काको महाराज, हंसोऽहं विमले जले ।
नीचसंगप्रसंगेन, मृत्युरेव न संशयः ॥२२०॥

दो पुरिसे धरउ धरा, अहवा दोहिंपि धारिआ वसुहा ।
उवयारे जस्स मई, उवयरियं जो न पम्हुसइ ॥२२१॥

न धर्मचिंता गुरुदेवभक्तिर्येषां न वैराग्यलवोऽपि चित्ते ।
तेषां प्रसूः क्लेशफलः पशूनामिवोद्भवः स्यादुदरंभरीणाम् ॥

ओहावसि पहावसि, ममं चेव निरक्खसि ।
लक्खिओ ते अभिप्पाओ, जवं भक्खेसि गद्दहा ॥२२३॥

अओ गया तओ गया, जोइज्जंति न दिसई ।
अम्मे न दिट्ठी तुम्मे न दिट्ठी, अगडे छूढा अणुल्लिआ ॥

सुकुमालकोमलभद्दलया, तुम्हेरत्ति हिंडणसीलणया ।
अम्ह पसाओ नत्थि ते भयं, दिहपिट्ठाओ तुम्ह भयं ॥२२५॥

एगदिने जे देवा, चवंति तेसिं पि माणुसा थोवा ।
कत्तो मे मणुयभवो, इति सुरवरो दुहिओ ॥२२६॥

अज्ञः सुखमाराध्यः सुखतरमाराध्यते विशेषज्ञः ।
ज्ञानलवदुर्विदग्धं, ब्रह्मापि तं नरं न रंजयति ॥२२७॥

सो हु तवो कायव्वो जेण मणो मंगुलं न चिंतेइ ।
जेण न इंदियहाणी जेण य जोगा न हायंति ॥२२८॥

लक्ष्मीः सुवर्णरूपाऽपि, पाणिपादेषु योज्यते ।
भूषयत्यन्तरात्मानं, वर्णरूपाऽपि भारती ॥२२९॥

जा जा पडई अवत्थडी, सा सा सहई शरीर ।
फूलह विढिंहि दुमीओ, घाणइ वहइ करीर ॥२३०॥

मूर्खस्य पञ्च चिह्नानि, गर्वी दुर्वचनी तथा ।
हठी चाप्रियवादी च, परोक्तं नैव मन्यते ॥२३१॥

इहोपपत्तिर्मम केन कर्मणा, क्व च प्रयातव्यमितो भवादिति ।
विचारणा यस्य न जायते हृदि, कथं स धर्मप्रवणो भविष्यति ॥

देवा विसयपसत्ता नेरइआ विविहदुःखसंतत्ता ।
तिरिआ विवेगविकला मणुआणं धम्मसामग्गी ॥२३३॥

अक्खाणसणी कम्माण मोहणी तह वयाण बंभवयं ।
गुत्तीण य मणगुत्ती चउरो दुक्खेण जिप्पंति ॥२३४॥

किं ते च कार्यं परदोषदृष्ट्या किं ते च कार्यं परचिंतया च ।
वृथा कथं खिद्यसि बालबुद्धे ! कुरु स्वकार्यं त्यज सर्वमन्यत् ॥

देवं श्रेणिकवत् प्रपूजय गुरुं वन्दस्व गोविन्दवत् ,
दानं शीलतपःप्रसङ्गसुभगां चाभ्यस्य सद्भावनाम् ।
श्रेयांसश्च सुदर्शनश्च भगवानाद्यः स चक्री यथा,
धर्मे कर्मणि कामदेववदहो चेतश्चिरं स्थापय ॥२३६॥

रत्तो दुट्ठो मूढो पूव्वं वुग्गाहिओ अ चत्तारि ।
एए धम्माणरिहा अरिहो पुण होइ मज्झत्थो ॥२३७॥

संतोषस्त्रिषु कर्तव्यः स्वदारे भोजने धने ।
त्रिषु नैव च कर्तव्यः दाने चाध्ययने तपे ॥२३८॥

न सा जाई न सा जोणी न तं ठाणं न तं कुलं ।
न जाया न मुआ जत्थ सव्वे जीवा अणंतसो ॥२३९॥

यौवनं धनसंपत्तिः प्रभुत्वमविवेकिता ।
एकैकमप्यनर्थाय किं पुनस्तच्चतुष्टयम् ॥२४०॥

धनमर्जय काकुत्स्थ ! धनमूलमिदं जगत्।
अन्तरं नैव पश्यामि निर्धनस्य मृतस्य च ॥१९४॥

माता यदि विषं दद्यात् पिता विक्रयते सुतम्।
राजा हरति सर्वस्वं का तत्र परिदेवना ॥१९५॥

कियन्मात्रं जलं विप्र ! जानुदघ्नं नराधिप !
इदृशी किमवस्था ते नहि सर्वे भवादृशाः ॥१९६॥

विना गुरुभ्यो गुणनीरधिभ्यो, जानाति तत्त्वं न विचक्षणोऽपि।
आकर्णदीर्घोज्वललोचनोऽपि, दीपं विना पश्यति नान्धकारे॥

करिष्यामि करिष्यामि करिष्यामीति चिन्तया।
मरिष्यामि मरिष्यामि मरिष्यामीति विस्मृतम् ॥१९८॥

गतानुगतिको लोको न लोकः पारमार्थिकः।
पश्य मूर्खेण लोकेन हारितं ताम्रभाजनम् ॥१९९॥

क्षमाखड्गं करे यस्य दुर्जनो किं करिष्यति।
स्थंडिले पतितो वह्निः स्वयमेवोपशाम्यति ॥२००॥

काव्यशास्त्रविनोदेन कालो गच्छति धीमतां।
व्यसनेन तु मूर्खाणाम् निद्रया कलहेन वा ॥२०१॥

गुणगणकथास्तावत्तावत् विलासकुतूहलम्,
स्मरपरिचयस्तावत्तावत् त्रपापरिशीलनम्।
वचनरचनास्तावत्तावत् मतिश्च विजृंभते,
जठरपिठरी सेयं यावत् कथंचन पूरिता ॥२०२॥

दीर्घायुर्भव भण्यते यदि पुनस्तन्नारकाणामपि–
सौख्यार्थं धनवान् भवेद्यदि पुनस्तत् म्लेच्छकानामपि।
संतानाय च पुत्रवान् भव पुनस्तत् कुर्कुटानामपि
तस्मात् सर्वसुखप्रदोऽस्तु भवतां श्रीधर्मलाभः श्रिये ॥२०३॥

अवश्यं यातारश्चिरतरमुषित्वाऽपि विषया,
वियोगे को भेदस्त्यजति न जनो यत् स्वयममून्।
व्रजन्तः स्वातन्त्र्यादतुलपरितापाय मनसः,
स्वयं त्यक्ता ह्येते शमसुखमनन्तं विदधति ॥२०४॥

रसातलं यातु तदत्र पौरुषं, कुनीतिरेषाऽशरणो ह्यदोषवान्।
निहन्यते यत् बलिनापि दुर्बलो, हहा महाकष्टमराजकं जगत्॥
एषा तटाकमिषतो वरदानशाला,
मत्स्यादयो रसवती प्रगुणा सदैव।
पात्राणि यत्र बकसारसचक्रवाकाः,
पुण्यं कियत् भवति तत्र वयं न विद्मः॥२०६॥
किं नन्दी किं मुरारिः किमुत सुरपतिः किं नलः किं कुबेरः,
किंवा विद्याधरोऽसौ किमु रतिरमणः किं विधुः किं विधाता।
नायं नायं न चायं न खलु नहि नवा नापि नासौ न चैषः,
क्रीडां कर्तुं प्रवृत्तः स्वयमिह हि हले भूपतिर्भोजदेवः॥२०७॥
आकारैरिङ्गितैर्गत्या चेष्टया भाषणेन च।
नेत्रवक्त्रविकारैश्च लक्ष्यतेऽन्तर्गतं मनः॥२०८॥
एह्यागच्छ समाविशासनमिदं प्रीतोऽस्मि ते दर्शनात्,
का वार्ता पुरि दुर्बलोऽसि च कथं कस्माच्चिरं दृश्यसे।
इत्येवं गृहमागतं प्रणयिनं ये भाषयन्त्यादरात्।
तेषां युक्तमशंकितेन मनसा गन्तुं गृहं सर्वदा॥२०९॥
क्लिश्यन्ते केवलं स्थूलाः सुधीस्तु फलमश्नुते।
ममन्थ शंकरः सिन्धुं रत्नान्यापुर्दिवौकसः॥२१०॥
जीर्णे भोजनमात्रेयः कपिलः प्राणिनां दया।
बृहस्पतिरविश्वासः पञ्चालः स्त्रीषु मार्दवम्॥२११॥
चौरश्चौरापको मंत्री, भेदज्ञः काणकः क्रयी।
अन्नदः स्थानदश्चैव, चौरः सप्तविधः स्मृतः॥२१२॥
पातु वो हेमगोपालः दण्डकम्बलमुद्वहन्।
षड्दर्शनपशुग्रामं, चारयन् जैनगोचरे॥२१३॥
यस्य बुद्धिर्बलं तस्य, निर्बुद्धेश्च कुतो बलम्।
वने सिंहो मदोन्मत्तः, शशकेन निपातितः॥२१४॥
प्रथमवयसि पीतं, तोयमल्पं स्मरन्तः,
शिरसि निहितभारा नालिकेरा नराणाम्।

हस्ते नरकपालं ते, मदिरामांसभक्षिणि ।
भानुः पृच्छति मातङ्गि ! किं तोयं दक्षिणे करे ॥१७१॥

मित्रद्रोही कृतघ्नश्च स्तेयी विश्वासघातकः ।
कदाचिच्चलितो मार्गे तेनेयं क्षिप्यते छटा ॥१७२॥

कूटसाक्षी मृषावादी पक्षपाती झगड्डके ।
कदाचिच्चलितो मार्गे तेनेयं क्षिप्यते छटा ॥१७३॥

मृत्योर्बिभेषि किं वीर ! भीतं मुञ्चति नो यमः ।
अजातं नैव गृह्णाति कुरु यत्नमजन्मनि ॥१७४॥

दिदृक्षुः भिक्षुरायातो द्वारि तिष्ठति वारितः ।
हस्तन्यस्तचतुःश्लोको किंवाऽऽगच्छति गच्छति ॥१७५॥

वामदेवेन मित्रण रूपसेनो वनान्तरे ।
घोरनिद्राप्रसंगेन लक्षलोभान्निपातितः ॥१७६॥

आतुरे व्यसनप्राप्ते, दुर्भिक्षे शत्रुसंकटे ।
राजद्वारे श्मशाने च, यस्तिष्ठति स बांधवः ॥१७७॥

उढो गर्भः प्रसवसमये, सोढमप्युग्रशूलं,
पथ्याहारैः स्नपनविधिभिः स्तन्यपानप्रयत्नः ।
विष्टामूत्रप्रभृतिमलिनैः कष्टमासाद्य सद्यः,
त्रातः पुत्रः कथमपि यया स्तूयतां सैव माता ॥१७८॥

सिंहादेकं बकादेकं, शिक्षेच्चत्वारि कुर्कुटात् ।
वायसात् पञ्च शिक्षेत, षट् शुनस्त्रीणि गर्दभात् ॥१७९॥

विहाराहारव्याहारव्यवहारास्तपस्विनाम् ।
गृहिणां तु व्यवहार एव शुद्धो विलोक्यते ॥१८०॥

विश्वामित्रपराशरप्रभृतयो ये चाम्बुपत्राशिन-
स्तेऽपिस्त्रीमुखपंकजं सुललितं दृष्ट्वैव मोहं गताः ।
आहारं सघृतं पयोदधियुतं भुञ्जन्ति ये मानवा-
स्तेषामिन्द्रियनिग्रहः कथमहो दम्मः समालोक्यताम् ॥
सिंहो बली द्विरदशूकरमांसभोजी,
संवत्सरेण रतिमेति किलैकवारम् ।

पारापतः खरशिलाकणभोजनोऽपि,
कामी भवत्यनुदिनं वद कोऽत्र हेतुः ॥१८२॥

सर्वेऽपि सन्तु सुखिनः सर्वे सन्तु निरामयाः ।
सर्वे भद्राणि पश्यन्तु मा कश्चित् पापमाचरेत् ॥१८३॥

अतिलोभो न कर्तव्यो लोभो नैव च नैव च ।
अतिलोभप्रसादेन सागरो सागरं गतः ॥१८४॥

वलं जगद्ध्वंसनरक्षणक्षमं, कृपा च किं संगमके कृतागसि ।
इतीव संचित्य विमुच्य मानसं,रुषैव रोषस्तव नाथ निर्ययौ ॥

वाह्वोः रुधिरमापीतं, भक्षितं मांसमुरुजम् ।
भागीरथ्यां पतिः क्षिप्तः साधु साधु पतिव्रते ॥१८६॥

रामे प्रव्रजनं वलेर्नियमनं पाण्डोः सुतानां वने,
वृष्णीनां निधनं नलस्य नृपते राज्यात् परिभ्रंशनम् ।
कारागारनिषेवणं च मरणं सञ्चिन्त्य लंकेश्वरे,
सर्वं कालवशादवाप्स्यति जनः कं कं परित्रायते ॥१८७॥

मान्धाता स महीपतिः कृतयुगालङ्कारभूतो गतः,
सेतुर्येन महोदधौ विरचितः क्वासौ दशास्यान्तकः ।
अन्ये चापि युधिष्ठिरप्रभृतयो दिवं गता भूपते !,
नैकेनापि समं गता वसुमती मन्ये त्वया यास्यति ॥१८८॥

रे रे मंडक मा रोदीर्यदहं खंडितोऽनया ।
रामरावणमुञ्जाद्याः स्त्रीभिः के के न खंडिताः ॥१८९॥

सुवंशजोप्यकृत्यानि कुरुते प्रेरितः स्त्रिया ।
स्नेहलं दधि मन्थाति पश्य मन्थानको न किम् ॥१९०॥

रे रे यन्त्रकमारोदीः कं कं न भ्रमयत्यमूः ।
भ्रूचापोत्क्षेपमात्रेण कराकृष्टस्य का कथा ॥१९१॥

दीवा निरीक्ष्य वक्तव्यं रात्रौ नैव च नैव च ।
सञ्चरन्ति महाधूर्ता वने वररुचिर्यथा ॥१९२॥

स एव त्वं स एवाहं स एव च तवाश्रमः ।
आदरं शिथीलीकृत्य पुनः किमयमादरः ॥१९३॥

वीतरागं स्मरन् योगी, वीतरागत्वमश्नुते ।
ईलिका भ्रमरीभीता, ध्यायन्ती भ्रमरी यथा ॥१४७॥

धन्या दृष्टिरियं यया विमलया दृष्टो भवान् प्रत्यहं,
धन्याऽसौ रसना यया स्तुतिपथं नीतो जगद्वत्सलः ।
धन्यं कर्णयुगं वचोऽमृतरसं पीतं मुदा येन ते,
धन्यं हृत् सततं च येन विशदस्त्वन्नाममन्त्रो धृतः ॥१४८॥

आत्मानं रथिनं विद्धि, शरीरं रथमेव तु ।
बुद्धिं तु सारथिं विद्धि, मनः प्रग्रहमेव च ॥१४९॥

उत्तमं प्रणिपातेन, शूरं भेदेन योजयेत् ।
नीचमल्पप्रदानेन, सदृशं च पराक्रमैः ॥१५०॥

औषधेन विना व्याधिः पथ्यादेव निवर्त्तते ।
न तु पथ्यविहीनस्य औषधानां शतैरपि ॥१५१॥

न चौरहार्यं न च राजहार्यं, न भ्रातृभाज्यं न च भारकारि ।
व्यये कृते वर्धत एव नित्यं, विद्याधनं सर्वधनप्रधानम् ॥१५२॥

नानाशास्त्रसुभाषितामृतरसैः श्रोत्रोत्सवं कुर्वतां,
येषां यान्ति दिनानि पण्डितजनव्यायामखिन्नात्मनाम् ।
तेषां जन्म च जीवितं च सफलं तैरेव भूर्भूषिता,
शेषैः किं पशुभिर्विवेकरहितैर्भूभारभूतैर्नरैः ॥१५३॥

राज्ञि राष्ट्रकृतं पापं राज्ञः पापं पुरोहिते ।
भर्त्तरि स्त्रीकृतं पापं शिष्यपापं गुरावपि ॥१५४॥

मृत्युः शरीरगोप्तारं रक्षितारं धनं धरा ।
दुश्चारिणीव हसति स्वपतिं पुत्रवत्सलम् ॥१५५॥

देयं स्तोकादपि स्तोकं न व्यपेक्षो महोदयः ।
इच्छानुसारिणी शक्तिः कदा कस्य भविष्यति ॥१५६॥

श्वःकार्यमद्य कुर्वीत पूर्वाह्णे चापराह्णिकम् ।
नहि प्रतीक्षते मृत्युः कृतमस्य नवा कृतम् ॥१५७॥

चवला मइलणसीला, सिणेहपरिपूरियावि तावेइ ।
दीवयसिहव्व महिला, लद्धपसरा भयं देइ ॥१५८॥

चर्मास्थिमज्जान्त्रवसास्रमांसामेध्याद्यशुच्यस्थिरपुद्गलानाम् ।
स्त्रीदेहपिण्डाकृतिसंस्थितेषु स्कंधेषु किं पश्यसि रम्यमात्मन् ॥
विलोक्य दूरस्थममेध्यमल्पं जुगुप्ससे मोटितनासिकस्त्वम् ।
भृतेषु तैरेव विमूढ ! योषावपुष्षु तत्किं कुरुषेऽभिलाषम् ॥
अमेध्यभस्त्रा वहुरन्ध्रनिर्यन्मलाविलोद्यत्कृमिजालकीर्णा ।
चापल्यमायानृतवञ्चिका स्त्री संस्कारमोहान्नरकाय भुक्ता ॥
कुरंगमातंगपतंगभृंगा मीना हताः पञ्चभिरेव पञ्च ।
एकः प्रमादी स कथं न हन्यात् यः सेवते पञ्चभिरेव पञ्च ॥
लालिज्जंते दोसा ताडिज्जंते गुणा वहू हुंति ।
गयवसभतुरंगाण व तो होज्ज सुसिक्खपरिवारो ॥१६३॥
उत्तमाः स्वगुणैः ख्याता मध्यमास्तु पितुर्गुणैः ।
अधमा मातुलैः ख्याताः श्वसुरैरधमाधमाः ॥१६४॥
अलसायंतेणवि सज्जणेण जे अक्खरा समुल्लविआ ।
ते पत्थरटंकुक्कीरिय व्व नहु अन्नहा हुंति ॥१६५॥

रागपदे प्रेमपदे लोभपदेऽहंकृतेः पदे स्वपदे ।
प्रीतिपदे कीर्तिपदे नहि कैर्द्रव्यव्ययः क्रियते ॥१६६॥
क्षेत्रं रक्षति चञ्चा सौधं लोलत्पटी कणान् रक्षा ।
दन्तात्ततृणं प्राणान् नरेण किं निरुपकारेण ॥१६७॥
नित्यानन्दपदप्रयाणसरणी श्रेयोऽवनीसारणी ।
संसारार्णवतारणैकतरणी विश्वर्द्धिविस्तारिणी ।
पुण्यांकूरभरप्ररोहधरणी व्यामोहसंहारिणी,
प्रीत्यै कस्य न तेऽखिलार्तिहरणी मूर्तिर्मनोहारिणी ॥१६८॥
वरं विहर्तुं सह पन्नगैर्भवेच्छठात्मभिर्वा रिपुभिः सहोषितुम् ।
अधर्मयुक्तैश्चपलैरपंडितैर्न पापमित्रैः सह वर्त्तितुं क्षमम् ॥१६९॥
पापान्निवारयति योजयते हिताय,
गुह्यं च गूहति गुणान् प्रकटीकरोति ।
आपद्गतं च न जहाति ददाति काले ।
सन्मित्रलक्षणमिदं प्रवदन्ति सन्तः ॥१७०॥

संत्यज्य लोकचिन्तामात्मपरिज्ञानचिन्तनेऽभिरतः ।
जितलोभरोषमदनः सुखमास्ते निर्भरं साधुः ॥१२४॥

दया भूतेषु वैराग्यं, विधिवत् गुरुपूजनम् ।
विशुद्धा शीलवृत्तिश्च, पुण्यं पुण्यानुबन्ध्यदः ॥१२५॥

क्षुद्रो लोभरतिर्दीनो, मत्सरी भयवान् शठः ।
अज्ञो भवाभिनन्दी स्याद्, निष्फलारंभसंगतः ॥१२६॥

दशार्णभद्रादपरो न मानी, श्रीशान्तिनाथादपरो न दानी ।
श्रीशालिभद्रादपरो न भोगी, श्रीस्थूलभद्रादपरो न योगी ॥

शालीभद्रोऽपि मेऽधीशः स्थूलभद्रः पितुर्मृतौ ।
विरक्तः कार्तिको दूनो, मेतार्यस्तु विगोपितः ॥१२८॥

पडिलेहण पमज्जण भिक्खरिआ लोअ भुंजणा चेव ।
पत्तगधुवण विआरग थंडिल्ला वसंथईया ॥१२९॥

अन्नं पानमथौषधं बहुविधं धर्मध्वजः कंबलं,
वस्त्रं पात्रमुपाश्रयश्च विविधो दण्डादिधर्मोपधिः ।
शस्तं पुस्तकपीठकादि घटते, धर्माय यच्चापरं,
देयं दानविचक्षणैस्तदखिलं मोक्षार्थिने भिक्षवे ॥१३०॥

जो देइ ओसहाईं मुणीण मणवयणकायगुत्ताणं ।
सो सुद्धभावविभवो भवे भवे होइ नीरोगो ॥१३१॥

आलस्स मोहा वन्ना, थंभा कोहा पमाय किविणत्ता ।
भयसोगा अन्नाणा, वक्खेव कुरुहणा रमणा ॥१३२॥

उत्तमा आत्मचिन्ता च, मोहचिन्ता च मध्यमा ।
अधमा विषयचिन्ता च, परचिन्ताऽधमाधमा ॥१३३॥

चक्कीदुगं हरिपणगं, पणगं चक्की य केसवो चक्की ।
केसवचक्की केसव, दुचक्की केसवचक्की य ॥१३४॥

जत्थ य विसयविराओ, कसायचाओ गुणेसु अणुराओ ।
कियासु अप्पमाओ, सो इय सीवसुहोवाओ ॥१३५॥

शक्रं वज्रधरं, बलं हलधरं, विष्णुं च चक्रायुधम्,
स्कन्दं शक्तिधरं, श्मशाननिलयं, रुद्रं त्रिशूलायुधम् ।

एतान् दोपभयार्दितान् गतघृणान् बालान् विचित्रायुधान्
नानाप्राणिषु चोद्यतप्रहरणान् कस्तान्नमस्येद् वुधः ॥
स्त्रीसंगं काममाचष्टे द्वेषं चायुधसंग्रहः,
व्यामोहं चाक्षसूत्रादिरशौचं च कमंडलुः ।
न सर्वज्ञा न नीरागाः शंकरब्रह्मविष्णवः,
प्राकृतेभ्यो मनुष्येभ्योप्यसमञ्जसवृत्तितः ॥१३७॥
जानन्ति कामान्निखिलाः ससंज्ञाः,
अर्थं नराः कर्म च केऽपि धर्मम् ।
जैनं च केचित् गुरुदेवशुद्धं,
केचित् शिवं केऽपि च केऽपि साम्यम् ॥१३८॥
आययणं जो भंजइ, पडिवन्नं धणं न देइ देवस्स ।
नस्संतं समुविक्खइ, सो वि हु परिभमइ संसारे ॥१३९॥
अपकारिणि कोपश्चेत्, कोपे कोपः कथं न ते ।
धर्मार्थकाममोक्षाणाम्, प्रसह्य परिपन्थिनि ॥१४०॥

दिने दिने मंजुलमंगलावलिः, सुसंपदः सौख्यपरंपरा च ।
इष्टार्थसिद्धिर्बहुला च बुद्धिः, सर्वत्र सिद्धिः सृजतां सुधर्मं ॥
मन एव मनुष्याणां कारणं वंधमोक्षयोः ।
वंधस्तु विपयासंगे, मुक्तेर्निर्विपयं मनः ॥१४२॥
मणमरणे इंदियमरणं, इंदियमरणे मरंति कम्माइं ।
कम्ममरणेण मुक्खो, तम्हा मणमारणं विंति ॥१४३॥
शिष्टे संगः श्रुतौ रंगः, सद्ध्याने धीधृतौ मतिः ।
दाने शक्तिर्गुरौ भक्तिः पडेते सुकृताकराः ॥१४४॥
महाव्याधिग्रस्तः शटितवसनो दीनवदनो,
बुभुक्षाक्षामात्मा परगृहशतप्रेक्षणपरः ।
सुदुःखार्तो लोके भ्रमति हि भवे ये न कुधिया,
न सद्भक्त्या ध्यातो ननु जिनपतिश्चिन्तितफलः ॥१४५॥
जगत्प्रभावं कलितात्मभावं, स्वच्छस्वभावं हतपापभावम् ।
देवेन्द्रवन्द्यं जगतां सुनन्द्यं, शंखेश्वरं पार्श्वजिनं प्रवन्दे ॥१४६॥

पिता दासो दासो भवति जनको बन्धुरहितो ।
रिपुर्बन्धुर्माता भवति दुहिता साऽपि जननी ॥
अनिष्टः स्यादिष्टः परिणमति शर्माऽसुखतया,
जनो धिक् संसारे तदपि रमति नो विरमति॥९९॥

यथा लाभस्तथा लोभो, लाभाल्लोभः प्रवर्द्धते ।
स्वर्णमाषद्वयीकार्यं, न मे कोट्यापि निष्ठितम् ॥१००॥

दित्तो अणिसणिज्जं, सुसाहुणो कुणइ कब्बुरं चरणं ।
जम्मंतरम्मि अप्पाउयं च अप्पाणमवि पायं ॥१०१॥

एवं कुणइ कुपत्ते, असणाइ एसणिज्जमवि दिंतो ।
पावपयडीओ सव्वा, दढबंधा सिथिलबंधावि ॥१०२॥

केसिं च होइ चित्तं, वित्तं अन्नेसिं उभयमन्नेसिं ।
चित्तं वित्तं पत्तं, तिन्निवि जेसिं तु ते धन्ना ॥१०३॥

करुणाइ परिक्खाए, लोभेण भयेण अमरिसेणं वा ।
जस पसिणट्ठा दाणं, अरिहंति कयावि नहु मुणिणो ॥१०४॥

यत्सन्तोषसुखं यदिन्द्रियदमो यच्चेतसः शान्तता,
यद्दीनेषु दयालुता यदपि गीः सत्यामृतस्यन्दिनी ।
शौर्यं धैर्यमनार्यसङ्गविरतिर्या संगतिः सज्जने–
ष्वेते ते परिणामसुन्दरतराः सर्वे विवेकाङ्कुराः ॥१०५॥

दानानि शीलानि तपांसि पूजा, सत्तीर्थयात्रा प्रवरा दया च ।
सुश्रावकत्वं व्रतपालनं च, सम्यक्त्वमूलानि महाफलानि ॥

पियमाइवच्चभज्जासयणसहिदेहनाइधणवग्गा ।
गुरुदेवदिट्ठिरागा मोहट्ठाणाणि भयहेऊ ॥१०७॥

जगज्जन्तुनिस्तारणे यानपात्रं, शमारामविश्रामसंलीनचित्तम् ।
नतानेकनाकीन्द्रपादारविन्दं, स्तुवे स्वामिसीमन्धरं देवदेवम् ॥

जन्मदुःखं जरादुःखं, मृत्युदुःखं पुनः पुनः ।
संसारसागरे दुःखं, तस्माज्जागृत जागृत ॥१०९॥

माता नास्ति पिता नास्ति, नास्ति भ्राता सहोदरः ।
अर्थो नास्ति गृहं नास्ति, तस्माज्जागृत जागृत॥११०॥

आशा हि लोकान् बध्नाति, कर्मणा बहुचिंतया।
आयुःक्षयं न जानाति, तस्माज्जागृत जागृत ॥१११॥

जिनभक्तिर्गुरुनमनं, दानं शीलं तपः श्रुतं ध्यानम्।
संवेगश्च प्रत्यहमिति कार्यं श्रावकैः सद्भिः ॥११२॥

सर्वज्ञो हृदि वाचि तद्गुणगणः काये च देशव्रतं,
धर्मे तत्परता परपरिणतौ बोधो बुधश्लाघ्यता।
प्रीतिः साधुषु बन्धुता बुधजने जैने रतिः शासने,
यस्यैवं जनरञ्जको गुणगणः स श्रावकः पुण्यभाक् ॥११३॥

पञ्चैतानि पवित्राणि, सर्वेषां धर्मचारिणाम्।
अहिंसा सत्यमस्तेयं, त्यागो मैथुनवर्जनम् ॥११४॥

साहूणं दंसणेणं, नासइ पावं असंकिया भावा।
फासुयदाणे निज्जर, अणुग्गहो नाणमाईणं ॥११५॥

भइभेया पुव्वोग्गह संसग्गीए व अभिनिवेसेण।
चउहा खलु मिच्छत्तं साहूणमदंसणेणहवा ॥११६॥

मइभेएण जमाली पुव्वुग्गहियंमि हवइ गोविंदो।
संसग्गि सागभिक्खू गोट्ठामहिलो अभिनिवेसे ॥११७॥

इहपरलोएसु हिओ, सुव्ववहारी गुरू ण मोत्तव्वो।
अणुसिट्ठिमुवालंभं, उवग्गहं चेव जो कुणइ ॥११८॥

जो भद्दओ वि ण कुणइ, दिंतो सीसाण वत्थपत्ताई।
सारणय सो ण गुरू, किं पुण पक्खेण जं भणिअं ॥११९॥

जीहाए वि लिहंतो, ण भद्दओ जत्थ सारणा णत्थि।
दंडेणवि ताडतो, स भद्दओ सारणा जत्थ ॥१२०॥

जह सरणमुवगयाणं, जीविअववरोवणं नरो कुणइ।
एवं सारणिआणं, आयरिओऽसारओ गच्छे ॥१२१॥

ओसन्नोवि विहारे, कम्मं सोहेइ सुलहबोही य।
चरणकरणविसुद्धं, उववूहंतो परूवंतो ॥१२२॥

जो जेण सुद्धधम्मम्मि, ठाविओ संजए गिहिणा वा।
सो चेव तस्स जाणह, धम्मगुरू धम्मदाणाओ ॥१२३॥

परिअट्टिए अभिहडे उब्भिन्ने मालोहडे इय ।
अच्छिज्जे अणिसिट्ठे अज्झोयरए य सोलसमे ॥७५॥
धाई दूई निमित्ते आजीववणीमगे तिगिच्छा य ।
कोहे माणे माया लोभे य हवंति दस एए ॥७६॥
पुव्विपच्छासंथव विज्जा मंते य चुन्नयोगे य ।
उप्पायणाइ दोसा सोलसमे मूलकम्मे य ॥७७॥
कामरागस्नेहरागाविषत्करनिवारणौ ।
दृष्टिरागस्तु पापीयान् दुरुच्छेदः सतामपि ॥७८॥
देवदाणवगंधव्वा जक्खरक्खस्सकिंन्नरा ।
बंभयारिं नमस्संति दुक्करं जे करंति ते ॥७९॥
कुरंडरंडत्तणदुहगाई वञ्झंतनिंदुविसकन्नगाई ।
जम्मन्तरे खंडियसीलभावा नाऊण कुज्जा दढसीलभावं ॥८०॥
इच्छा मिच्छा तहक्कारो आवस्सिआ य निसिहीया ।
आपुच्छणा य पडीपुच्छा छन्दणा य निमंतणा ॥
उवसंपया य काले सामायारी भवे दसहा ॥८१॥

श्रीमज्जैनगृहे जिनप्रतिकृतौ जैनप्रतिष्ठाविधौ,
श्रीजैनस्नपने जिनार्चनविधौ श्रीसंघपूजादिके ।
श्रीजैनागमलेखने च सततं श्रीतीर्थयात्रादिके,
येषां स्वं विनियोगमेति धनिनां धन्यास्त एव क्षितौ ॥८२॥
जीर्णोद्धारः श्रुतपरिमलामोदितात्मन्यजस्रं,
पात्रे दानं भगवति जिनाधीश्वरे नित्यभक्तिः ।
दीनानाथोद्धरणमनिशं विश्वविश्वोपकारः,
प्राणित्राणं फलमिदमहो चञ्चलायाः श्रियोऽस्याः ॥८३॥
धर्मे यत्नः शुभा बुद्धिः सारासारत्वनिर्णयः ।
हेयोपादेयविज्ञानं संवेगोपशमौ श्रुते ॥८४॥
न ते नरा दुर्गतिमाप्नुवन्ति, न मूकतां नैव जडस्वभावम् ।
नैवान्धतां बुद्धिविहीनतां च ये लेखयन्त्यागमपुस्तकानि ॥
दिट्ठे तुह मुहकमले, तिन्निवि णिट्ठाइ निरवसेसाइं ।
दारिद्दं दोहग्गं जम्मंतरसंचियं पावं ॥८६॥

भववीजांकुरजनना, रागाद्याः क्षयमुपागता यस्य ।
ब्रह्मा वा विष्णुर्वा हरो जिनो वा नमस्तस्मै ॥८७॥

किं राज्येन धनेन धान्यनिचयैर्देहस्य सद्भूषणैः,
पांडित्येन भुजावलेन महता वाचां पटुत्वेन च ।
जात्याऽप्युत्तमया कुलेन शुचिना शुभ्रैर्गुणानां गणै,-
रात्मा चेन्न विमोचितोऽतिगहनात् संसारकारागृहात् ॥८८॥

मिच्छे सासाणे वा अविरयसंमंमि अहव गहिअंमि ।
जंति जिआ परलोए सेसिक्कारस गुणे मुत्तुं ॥८९॥

अक्षुद्रो रूपसौम्यो विनयनययुतो क्रूरताशाठ्यमुक्तो,
मध्यस्थो दीर्घदर्शी परहितनिरतो लब्धलक्षः कृतज्ञः ।
सद्दाक्षिण्यो विशेषी सदयगुणरुचिः सत्कथः पक्षमुक्तो,
वृद्धार्हो लज्जनो यः शुभजनदयितो धर्मरत्नस्य योग्यः ॥९०॥

टुंटा मुंगा अंधा दारिद्दा घोरदुःखवाहुल्ला ।
सूलाभिन्नसरीरा साहुअसाहूण निंदाए ॥९१॥

जह तुब्भे तह अम्हे तुम्हेवि य होइ जहा अम्हे ।
अप्पाहेइ पडंतं पंडुअपत्तं किसलयाणं ॥९२॥

नैगमः संग्रहश्चैव व्यवहारर्जुसूत्रकौ ।
शब्दः समभिरूढाख्य एवम्भूतश्च सप्त ते ॥९३॥

नवकारेण विवोहो, अणुसरणं सावगो वयाइं मे ।
जोगो चिइवंदणमो, पच्चक्खाणं च विहिपुव्वं ॥९४॥

तह चेईहरगमणं, सक्कारो वंदणं गुरुसगासे ।
पच्चक्खाणं सवणं, जइपुच्छा उचियकरणिज्जं ॥९५॥

तणसंथारनिसण्णोवि, मुणिवरो भट्ठरागमयमोहो ।
जं पावइमुत्तिसुहं, कत्तो तं चक्कवट्टीवि ॥९६॥

जं विसयविरत्ताणं, सोक्खं सज्झायभावियमईणं ।
तं मुणइ मुणिवरो चिय, अणुहवओ न ऊण अण्णोत्ति ॥९७॥

निर्जितमदमदनानां, वाक्कायमनोविकाररहितानाम् ।
विनिवृत्तपराशानामिहैव मोक्षः सुविहितानाम् ॥९८॥

पुरिसेण सहगयाए तेसिं जीवाण होइ उद्दवणं ।
वेणुअदिट्ठंतेणं तत्ताइसिलागनाएण ॥५०॥
इत्थीण जोणीमज्झे गब्भगयाइं हवंति जे जीवा ।
उप्पज्जंति चयंति य समुच्छिमा असंखया भणिया ॥५१॥

मेहुणसन्नारुढो नवलक्खं हणेइ सुहुमजीवाणं ।
तित्थयरेणं भणियं सद्दहियव्वं पयत्तेणं ॥५२॥

तित्थयरत्तं सम्मत्तखाइयं सत्तमीइ तइयाए ।
वंदणएणं विहिणा बद्धं च दसारसीहेणं ॥५३॥

सेयम्बरो य आसम्बरो य बुद्धो व अहव अन्नो वा ।
समभावभाविअप्पा लहइ मुक्खं न संदेहो ॥५४॥

सम्मत्तंमि उ लद्धे पलियपहुत्तेण सावओ हुज्जा ।
चरणोवसमखयाणं सागरसंखंतरा हुंति ॥५५॥

दयां विना देवगुरुक्रमार्चा, तपांसि सर्वेन्द्रिययन्त्रणानि ।
दानानि शास्त्राध्ययनानि सर्व, सैन्यं गतस्वामि यथा वृथैव ॥

श्रद्धालुतां श्राति पदार्थचिन्तनात्,
धनानि पात्रेषु वपत्यनारतम् ।
कीरत्यपुण्यानि सुसाधुसेवना,
दतोऽपि तं श्रावकमाहुरुत्तमाः ॥५७॥

अट्ठेव य अट्ठसया, अट्ठसहस्स च अट्ठकोडीओ ।
जो गुणइ अट्ठलक्खे, सो तइअभवे लहइ सिद्धिं ॥५८॥

व्यसनानि सन्ति बहुशो, व्यसनद्वयमेव साधुमन्येऽहम् ।
विद्याऽभ्यसनव्यसनम्, अथवा जिननाथसेवनव्यसनम् ॥५९॥

लक्ष्मीः कृतार्था सफलं तपोऽपि, ध्यानं सदोच्चैर्जनबोधिलाभः ।
जिनस्य भक्तिर्जिनशासने श्रीः, गुणाः स्युरुद्यापनतो नराणाम् ॥

जो देइ उवस्सयं जइवराण तवनियमजोगजुत्ताणं ।
तेणं दिन्ना वत्थन्नपाणसयणासणविगप्पा ॥६१॥

नाणं पयासयं सोहओ तवो संयमो य गुत्तिकरो ।
तिण्हं पि समाओगे मोक्खो जिणसासणे भणिओ ॥६२॥

पियधम्मो दढधम्मो संविग्गोऽवज्जभीरू असढो य।
खंतो दंतो गुत्तो थिरव्वय जिइंदिओ उज्जू ॥६३॥

सङ्घस्य भक्तिः सुकुलप्रसूतिः, सुपात्रदानं शुभवित्तयोगः।
सङ्घाधिपत्यं च सुतीर्थसेवा, लभ्यानि भाग्यैः प्रचुरैरमूनि ॥

पियमाइभयणीभज्जापुत्तत्तणेण सव्वेवि।
जीवा जाया वहुसो जीवस्स उ एगमेगस्स ॥६५॥

दुल्लहा उ मुहादायी मुहाजीवी वि दुल्लहा।
मुहादायी मुहाजीवी दोवि गच्छन्ति सुग्गइं ॥६६॥

स्नानं मनोमलत्यागो दानं चाभयदक्षिणा।
ज्ञानं तत्वार्थसंवोधो ध्यानं निर्विषयं मनः ॥६७॥

जिज्ञासा गुरुयोगो विधिपरता वोधपरिणतिः स्थैर्यम्।
उक्तक्रियाऽल्पभवता व्याख्यांगानीति समयविदः ॥६८॥

राजन्! यत्र पतिंवरेव वृणुते कैवल्यलक्ष्मीः स्वयम्,
संघाखंडलमूर्ध्नि वर्षति पयोद्दालीव राजादनी।
यस्मिन् पंक इव प्रयाति वृजिनं मार्तंडकुंडांभसा,
तत्तीर्थं विमलाचलो विजयते सौराष्ट्रचूडामणिः ॥६९॥

सर्वज्ञमीश्वरमनंतमसंगमग्र्यं,
सार्वीयमस्मरमसंख्यमनीहमीद्ध।
सिद्धं शिवं शिवकरं करणव्यपेतम्,
श्रीमज्जिनं जितरिपुं प्रयतः प्रणौमि ॥७०॥

नत्वा श्रीवर्धमानाय श्रीमते च सुधर्मणे।
सर्वानुयोगवृद्धेभ्यो वाण्यै सर्वविदस्तथा ॥७१॥

संजोयणापमाणे, इंगाले धूमकारणे पढमा।
वसही वहीरंतरे वा, रसहेऊ दव्वसंजोगा ॥७२॥

संकिय मक्खिय निक्खित्त, पिहिय साहरिय दायगुम्मीसे।
अपरिणय लित्त छड्डिय, एसणदोसा दस हवंति ॥७३॥

आहाकम्मुदेसिय पूईकम्मे य मिसजाए य।
ठवणा पाहुडियाए पाओयर किय पामिच्चे ॥७४॥

धम्मिड्ढी भोगिड्ढी पाविड्ढी अ तिहा भवे इड्ढी ।
सा भन्नइ धम्मिड्ढी जा दिज्जइ धम्मकज्जेसु ॥२३॥
सा भोगिड्ढी दिज्जइ सरीरभोगंमि जीइ उवओगो ।
जा दाणभोगरहिआ सा पाविड्ढी अणत्थफला ॥२४॥

अजयं चरमाणो अ पाणभूयाइ हिंसइ ।
बंधइ पावयं कम्मं तं से होइ कडुअं फलं ॥२५॥
कहं चरे कहं चिट्ठे कहमासे कहं सए ।
कहं भुंजंतो भासंतो पावं कम्मं न बंधइ ॥२६॥
जयं चरे जयं चिट्ठे जयमासे जयं सए ।
जयं भुंजंतो भासंतो पावं कम्मं न बंधइ ॥२७॥

पढमं नाणं तओ दया एवं चिट्ठइ सव्वसंजए ।
अन्नाणी किं काही किं वा नाही छेअपावगं ॥२८॥
सोच्चा जाणइ कल्लाणं सोच्चा जाणइ पावगं ।
उभयंपि जाणए सोच्चा जं छेअं तं समाचरे ॥२९॥

जो जीवेवि न याणेइ अजीवे वि न याणेइ ।
जीवाजीवे अयाणंतो कह सो नाहीइ संजमं ॥३०॥
जो जीवे वि वियाणेइ अजीवे वि वियाणेइ ।
जीवाजीवे वियाणंतो सो हु नाहीइ संजमं ॥३१॥

जं न लहइ सम्मत्तं लद्धूण वि जं न एइ संवेगं ।
विसयसुहेसु अ रज्जइ सो दोसो रागदोसाणं ॥३२॥
रागद्वेषौ यदि स्यातां तपसा किं प्रयोजनम् ।
तावेव यदि न स्यातां तपसा किं प्रयोजनम् ॥३३॥
मित्रा तारा बला दिप्रा स्थिरा कान्ता प्रभा परा ।
नामानि योगदृष्टीनां लक्षणं च निबोधत ॥३४॥

तृणगोमयकाष्ठाग्निकणदीपप्रभोपमा ।
रत्नताराकचंद्राभा सद्दृष्टेर्दृष्टिरष्टधा ॥३५॥
पढमं पोरिसि सज्झायं बिइयं झाणं झिआयइ ।
तइआए गोअरकालं पुणो चउत्थिए सज्झायं ॥३६॥

जा गंठी ता पढमं गंठिं समइच्छओ भवे वीअं ।
अनियट्टीकरणं पुण सम्मत्तपुरक्खडे जीवे ॥३७॥
आलंवणमलहंती जह सट्ठाणं न मुंचए इलिआ ।
एवं अकयतिपुञ्जो मिच्छं चिअ उवसमी एइ ॥३८॥

मिच्छत्तंमि अखीणे तियपुञ्जा सम्मदिट्ठीणो नियमा ।
खीणंमि उ मिच्छत्ते दुएगपुंजी व खवगो वा ॥३९॥
अंतमुहुत्तुवसमओ छावलि सासाण वेअगो समओ ।
साहिअतित्तीसायर खइओ दुगुणो खओवसमो ॥४०॥
उक्कोसं सासायण उवसमिआ हुंति पंचवाराओ ।
वेअगखइगा इक्कसि असंखवारा खओवसमो ॥४१॥

आणाइ तवो आणाइ संजमो तह य दाणमाणाए ।
आणारहिओ धम्मो पलालपुल्लु व्व पडिहाइ ॥४२॥
न दुक्करं अंबयलुंबतोडणं न दुक्करं सरिसवनच्चिआए ।
तं दुक्करं तं च महाणुभावं जं सो मुणी पमयवणंमि वुच्छो ॥

गिरौ गुहायां विजने वनान्तरे वासं श्रयन्तो वशिनः सहस्रशः ।
हर्म्येऽतिरम्ये युवतिजनान्तिके वशी स एकः शकडालनन्दनः ॥
वेश्या रागवती सदा तदनुगा षड्भी रसैर्भोजनं,
शुभ्रं धाम मनोहरं वपुरहो नव्यो वयःसंगमः ।
कालोऽयं जलदाविलस्तदपि यः कामं जिगायादरात्,
तं वंदे युवतिप्रबोधकुशलं श्रीस्थूलभद्रं मुनिम् ॥४५॥
पुप्फफलाणं च रसं सुराई महिलयाणं च ।
जाणंता जे विरया ते दुक्करकारया वंदे ॥४६॥
देहे द्रव्ये कुटुम्बे च सर्वसंसारिणां मतिः ।
जिने जिनमते संघे पुनर्मोक्षाभिलाषिणाम् ॥४७॥

वरं वाही वरं मच्चू वरं दारिद्दसंगमो ।
वरं अरण्णवासो अ मा कुमित्ताण संगमो ॥४८॥
इत्थीणं जोणीसु हवंति वेइंदिया य जे जीवा ।
इक्को य दुन्नि तिन्नि वि लक्खपहुत्तं तु उक्कोसं ॥४९॥

# सूक्तसञ्चयः

[सञ्चयकर्ता—तपस्वी मुनिमहाराजश्री मंगलविजयजी]

श्रीपार्श्वं तीर्थनाथं प्रशमरसमयं केवलानन्दयुक्तं, वामेयं पार्श्वयक्षैः सुरवरसहितैः सेवितं भूरिभक्त्या।
यस्य स्नात्राभिषेकपृथुतरकमलैर्निर्जरा यादवाः स्यु,ख्यातं शङ्खेश्वरं तं त्रिभुवनविहितख्यातकीर्तिं नमामि ॥१॥

उरगगिरिजलणसागर—नहयलतरुगणसमो य जो होई।
भमरमिगधरणीजलरुह—रविपवणसमो जओ समणो ॥२॥

सम्मद्दिट्ठी जीवो विमाणवज्जं न बंधए आउं।
जइवि ण सम्मत्तजढो अहव न बद्धाउओ पुव्विं ॥३॥

वीतराग ! सपर्यातस्तवाज्ञापालनं वरम्।
आज्ञाराद्धा विराद्धा च शिवाय च भवाय च ॥४॥

न भवति धर्मः श्रोतुः सर्वस्यैकान्ततो हितश्रवणात्।
ब्रुवतोऽनुग्रहबुद्ध्या, वक्तुस्त्वेकान्ततो भवति ॥५॥

भावच्चणमुग्गविहारया य दव्वच्चणं तु जिणपूया।
पढमा जईण दुन्निवि गिहीण पढम च्चिय पसत्था ॥६॥

त्यक्तसंगो जीर्णवासा मलक्लिन्नकलेवरः।
भजन्माधुकरीं वृत्तिं मुनिचर्यां कदाऽऽश्रये ॥७॥

ज्ञानाद्विदन्ति खलु कृत्यमकृत्यजातं,
ज्ञानाच्चरित्रममलं च समाचरन्ति।
ज्ञानाच्च भव्यभविनः शिवमाप्नुवन्ति
ज्ञानं निदानमखिलोत्तमशर्मलक्ष्म्याः ॥८॥

निव धणि नारी नर सुर अप्पप्पवियार अप्पवियारत्तं ।
सड्ढत्तं दरिद्दत्तं चइज्जइ नव नियाणाइं ॥९॥

शुश्रूषा श्रवणं चैव ग्रहणं धारणं तथा ।
ऊहापोहोऽर्थविज्ञानं तत्त्वज्ञानं च धीगुणाः ॥१०॥

मूलं साह पसाहा गुच्छ फले भूमिपडिय भक्खणया ।
सव्वं माणस पुरिसे साउह जुज्जंत धणहरणं ॥११॥

पमाओ य जिणिंदेहिं भणिओ अट्ठ भेयओ ।
अन्नाणं संसओ चेव मिच्छानाणं तहेव य ॥१२॥

रागो दोसो मइभंसो धम्मम्मि यँ अणायरो ।
जोगाणं दुप्पणिहाणं अट्ठहा वज्जियव्वओ ॥१३॥

तिव्वंपि पुव्वकोडीकयंपि सुकयं मुहुत्तमित्तेण ।
कोहग्गहिओ हणिउं हहा हवइ भवदुगेवि दुही ॥१४॥

अविहिकया वरमकयं, अछूयवयणं भणंति समयन्नू ।
पायच्छित्तं अकए गुरुअं वितहं कए लहुअं ॥१५॥

विग्घोवसामिणी एगा अब्भुदयपसाहणी भवे बीआ ।
निव्वुइकरणी तइआ, फलायाओ जहत्थनामेहिं ॥१६॥

अस्त्याशादृढमूलः कुबोधकन्दः कुसङ्गतिस्कन्धः ।
विस्तृतकषायशाखागणः प्रमादेन पल्लवितः ॥१७॥

व्यसनोरुदलो विषयच्छायावारितविवेकमिहिरकरः ।
अयशःकुसुमो दुर्गतिफलश्च संसारविषवृक्षः ॥१८॥

जिणवरआणारहियं वद्धारंता वि केवि जिणदव्वं ।
बुड्डंति भवसमुद्दे मूढा मोहेण अन्नाणी ॥१९॥

उस्सुत्तभासमाणं बोहीनासो अणंतसंसारो ।
पाणच्चएवि धीरा उस्सुत्तं ता न भासेइ ॥२०॥

तित्थयरपवयणसुअं आयरियं गणहरं महिड्ढिअं ।
आसायंतो बहुसो अणंतसंसारिओ होइ ॥२१॥

ववसायफलं विहवो विहवस्स फलं सुपत्तविणिओगो ।
तयभावे ववसाओ विहवोवि अ दुग्गइनिमित्तं ॥२२॥

# सूक्तसञ्चयः

शान्तमूर्तिश्रीमन्मुनिमहाराजश्रीगुलाबविजयमहाराजशिष्यमुनिमहाराजश्रीमंगलविजयसदुपदेशेन
शिहोरवास्तव्यसुश्रावकप्रभुदासात्मजेन पोपटलालेन प्रकाशितं
सुश्रावकदेवचंद्रात्मजेन हीरालालेन संशोधितं च

पानकोरनाकासमीपवर्तिनि श्रीशारदामुद्रणालये तदधिपतिना देवचंद्रात्मजेन सुश्रावकहीरालालेन मुद्रितम् ।

वि. सं. १९९६

प्रतयः ५००

वीर सं. २४६६

# विषयानुक्रमः



॥२॥